श्रीसर्वेश्वरो विजयतेतमाम्

श्रीभगवन्निम्बार्कमहामुनीन्द्राय नमः

# श्रीब्रह्मसूत्रम्

( श्रीनिम्बार्कदर्शनम् )

स्वाभाविक-भिन्नाभिन्नब्रह्म-प्रतिपादनपरम् ।

मुद्रापकः प्रकाशकश्च

महत्तम पण्डित कल्याणदासः ।

| | | |
|---|---|---|
| प्रथम संस्करणे १००० प्रति | सं० १९८९ ईशवीय १९३२ | मूल्य श्री निम्बार्क-पद प्रेम |

779

श्रीसर्वेश्वरो विजयतेतमाम्

श्री १०८ भगवन्निम्बार्कमहामुनीन्द्राय नमः

# श्रीब्रह्मसूत्रम्

श्रीभगवन्निम्बार्कमहामुनीन्द्रविरचितवेदान्त-
पारिजातसौरभाख्यसूत्रवाक्यार्थेन

श्रीश्रीनिवासाचार्यचरणप्रणीत—
श्रीवेदान्तकौस्तुभभाष्येन च
सनाथीकृतम् ।

## ( श्रीनिम्बार्कभाष्यम् )

न्यायोपाध्याय काव्यतीर्थ—
पं० दुण्ढिराजशास्त्रिणा संशोधितम् ।

तच्च

श्रीवृन्दावन पानीयघाटस्थान महत्तम—
पं० श्रीकल्याणदासेन मुद्रापितं
प्रकाशितश्च ।

प्रथमसंस्करणम् १००० प्रति | विक्रम सं० १९८९ ईशवीयः १९३२ | मूल्यं श्री निम्बार्क-पद प्रेम

श्रीराधासर्वेश्वरो विजयतेतमाम् नितराम् ।

# समर्पणपत्रम्

हे निम्बार्क दयानिधे गुणनिधे हे भक्तचिन्तामणे
हे आचार्य्यशिरोमणे मुनिगणैरामृग्यपादाम्बुज ॥
हे सृष्टिस्थितिपालक प्रभवन हे नाथ मायाधिप
हे गोवर्द्धनकन्दरालय विभो मां पाहि सर्वेश्वर ॥

अयि परमसौशील्यादिगुणगणार्णव शरणागतवत्सल श्रीसुदर्शनचक्रावतार श्रीमदाद्याचार्य्य भगवान् श्री १०८ श्रीनिम्बार्क महामुनीन्द्र परब्रह्म पुरुषोत्तम श्रीकृष्ण भगवान्की पवित्र प्रेरणासे भागवत धर्म्म तथा भगवदीयानादि वैदिक सत्सम्प्रदाय-प्रवर्त्तनार्थ इस धराधामपर अवतीर्णहोकर संसारी जीवोंके शिक्षार्थ आपने अखण्ड नैष्ठिक ब्रह्मचर्य्यव्रतका पालन किया, तथा आध्यात्मिकतापत्रयतप्त जीवसमुदायको परमानन्दस्वरूप भगवद्भावापत्ति (मोक्ष) प्रदानकरनेकी शुभकामना से श्रीराधाकृष्ण युगलोपासनारूप भागवतधर्म्मका स्वयं आचरण किया, तथा स्वकीय शिष्यसमुदायको-भी परमपावन नैष्ठिक ब्रह्मचर्य्य तथा श्रीकृष्णकैङ्कर्य्यरूपधर्म्मका आचरणकराया। स्वरचितग्रन्थोंमें चिदचित् परब्रह्मस्वरूपका यथार्थतत्त्व सन्निविष्ट कर निज शिष्योंको ग्रहण कराया, तथा वैदिक सच्छास्त्रोंका अनुशीलन कर उनका परम सार-रूप एवं अकाट्य द्वैताद्वैतसिद्धान्तका प्रतिपादन किया। इसप्रकार आपने इस वसुधातलपर सनातन भागवतधर्म्मका स्थापन एवं प्रचारकर श्रीभगवदाज्ञाका पूर्णतया पालनकर सर्वेश्वर श्रीकृष्ण भगवान्को सन्तुष्ट किया, तथा द्वैताद्वैत सिद्धान्त प्रतिपादक वे०पा० सौरभनामक ब्र०सू० वाक्यार्थका प्रणयन कर उसका विशदरूपसे तात्पर्य्य प्रकाशितकरनेकें लिये स्वकीय शिष्यप्रवर श्री श्री निवासाचार्य्यजीको आज्ञादी, उन्होंने श्रीचरणोंकी आज्ञा सादर शिरोधार्य्य कर वेदान्तकौस्तुभनामक ब्र०सू० भाष्य निर्म्माण किया। श्री गोपालजीकी असीम कृपासे उक्तभाष्यद्वयका प्रकाशन कर निम्बग्रामनिवासी परमकारुणिक श्रीमदाद्याचार्य्य श्री १०८ श्रीभगवन्निम्बार्क महामुनीन्द्र तथा तच्छिष्य श्रीश्रीनिवासाचार्य्यजीके परम पुनीत करकमलों में यह ( भाष्यद्वयोपेत ब्रह्मसूत्र ) सबहुमान पुरःसर समर्पित कर सविनय प्रार्थना-करताहूं कि भवदीय पादपद्माश्रित विनीत सेवक द्वारा समर्पित इस स्वरचित भाष्य-द्वयकी भेंटको स्वीकृत कर इस की ज्ञानरश्मियोंसे अज्ञानतिमिराच्छन्न जीवोंके हृदयोंको प्रकाशित कर उनको कल्याणमार्गका पथिक बनाकर कृतार्थ करनेकी कृपा कीजिये।

**अनन्त चतुर्दशी**
**सं० १९८९ वि०**

भवदीय पादपद्मैकशरणो वृन्दावन-
**पानीयघाट वास्तव्यः (पं.) कल्याणदासः ।**

# भूमिका

श्री ६ भगवन्निम्बार्कमहामुनीन्द्राय नमः ।

हार्दध्वान्तनिरासवासरमणिर्विज्ञानवारान्निधि-
भक्ताभीष्टसहस्रपूरणविधौ चैतन्यचिन्तामणिः ॥
सद्भृङ्गेप्सितविष्णुभक्तिनलिनीव्याकोशहेतूदयः,
सोऽस्माकं कुरुतां भवार्त्तिशमनं निम्बार्कनामा मुनिः ॥ १ ॥



जकल प्रायः प्रत्येक ग्रन्थके प्रारम्भमें भूमिका लिखनेकी प्रथा चल पड़ीहै अत एव 'महाजनो येन गतः स पन्थाः' के अनुसार भाष्यद्वयोपेत ( श्रीभगवन्निम्बार्कमहामुनीन्द्रकृत वेदान्त-पारिजात-सौरभ तथा तच्छिष्य श्री श्रीनिवासाचार्यकृत वेदान्त-कौस्तुभ ) इस ग्रन्थरत्न अर्थात् ब्रह्मसूत्र ( वेदान्तदर्शन ) के सम्बन्धमें संक्षेपतः निवेदन कियाजाताहै—

यह बात तो निर्विवादहीहै कि श्रीब्रह्मसूत्रके कर्त्ता अथवा रचयिता वेदव्यासजीहैं और यह मत प्रायः सर्वमान्यभीहै, अतः इस ग्रन्थके निर्म्माताके विषयमें विशेष कहने का प्रयोजन नहीं ।

अब देखना चाहिये कि कितने समय पूर्व इस ( ब्रह्मसूत्र ) का निर्म्माण हुवा था । श्रीमद्भगवद्गीता ( श्रीवेदव्यासकृत महाभारत-भीष्मपर्व्वान्तर्गत ) के त्रयोदशाध्यायके चतुर्थश्लोकमें ब्रह्मसूत्र का नामनिर्देश ( क्षेत्रक्षेत्रज्ञके विचारप्रसङ्गमें ) किया गया है यथा—

"ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥"

किन्तु ब्रह्मसूत्रके 'अनुस्मृतेश्च' इत्यादि सूत्रोंमें गीता का उल्ले(१)ख

( १ ) अनुस्मृतेश्च इ० सूत्र व्याख्यामें सब भाष्यकारों ने श्रीगीताका प्रमाण उद्धृत कियाहै ।

होनेसे यह निर्णय करना कठिनहै कि इन दोनों में से कौन ग्रन्थ पहले बना, परन्तु यह बात निश्चित है कि ब्रह्मसूत्रके रचयिता तथा श्रीमद्भगवद्गीता के सङ्कलन कर्ता श्री वेदव्यासजी ही हैं । अतः ब्रह्मसूत्र और श्रीमद्भगवद्गीता का रचना काल ( थोड़े अन्तरसे ) एककालीन माना जासकताहै । श्रीमद्भगवद्गीताका रचनाकाल महाभारतमीमांसा ( इण्डियनप्रेस, प्रयाग ) के अनुसार अबसे प्रायः ५००० वत्सर पूर्व सिद्ध होताहै । क्यों कि महाभारत युद्ध अबसे ५००० वर्ष पूर्व हुवा था और उस युद्ध के आरम्भमें ही श्रीकृष्णभगवान् ने अर्जुन को गीता का उपदेश किया जिसे भगवान् श्री वेदव्यासजीने महाभारत भीष्म पर्वमें सङ्कलित किया । अस्तु, श्रीमद्भगवद्गीताका समसामयिक होने से ब्रह्मसूत्र का रचनाकाल भी प्रायः ५००० वर्ष पूर्व निर्दिष्ट किया जा सकता है ।

श्रीभगवन्निम्बार्कमहामुनीन्द्रका समय-निरूपण ।

भविष्यपुराणमें लिखा है—

"सुदर्शनो द्वापरान्ते कृष्णा(१)ज्ञप्तो जनिष्यति ।
निम्बादित्य इति ख्यातो धर्मग्लानिं हरिष्यति ॥

सूत उवाच ॥

शृणुष्व चरितं तस्य निम्बार्कस्य महात्मनः ।
यमाह भगवान् कृष्णः कुरु कार्य्यं ममाज्ञया ॥
मेरोश्च दक्षिणे पार्श्वे देवनद्यास्तटे शुभे ।
देशे तैलङ्गके रम्ये देवर्षिवरसेविते ॥
तत्रावतीर्य्य सद्धर्मान्नारदाद्देवदर्शनात् ।
लब्ध्वा भूमौ वर्त्तयस्व नष्टप्रायान्ममाज्ञया ॥
माथुरे नैमिषारण्ये द्वारवत्यां ममाश्रमे ।
सुदर्शनाश्रमादौ च स्थितिः कार्य्या त्वयाऽनघ ॥
ओमित्यादेशमादाय भगवाञ्छ्रीसुदर्शनः ।
भक्ताभीष्टप्रदः साक्षादवतीर्णो महीतले ॥

---

( १ ) सुदर्शन महाबाहो कोटिसूर्यसमप्रभ । अज्ञानतिमिरान्धानां विष्णोर्मार्गं प्रदर्शय ।

देशे तैलङ्गके पुण्ये द्विजवर्य्यो महामनाः।
सुदर्शनाश्रमे पुण्ये भृगुवंशसमुद्भवः॥
नाम्नाऽरुण इति ख्यातो वेदवेदाङ्गपारगः।
ऋषिरूपधरश्चासीज्जयन्त्या भार्य्यया सह॥
समाहितं तेन तेजो विष्णुचक्रसमुद्भवम्।
दधार मनसा देवी जयन्ती पतिदेवता॥
तेजसा शुशुभे तेन चन्द्रेणेव दिशाऽमला।
अथ सर्वगुणोपेते काले परमशोभने॥
कार्त्तिकस्य सिते पक्षे पूर्णिमायां वृषे बुधौ।
कृत्तिकाभे महारण्ये उच्चस्थे ग्रहपञ्चके॥
सूर्य्यावसानसमये मेषलग्ने निशामुखे।
जयन्त्यां जयरूपिण्यां जजान जगदीश्वरः॥
येन सर्वमिदं विश्वं वेदधर्मे नियोजितम्।
विरिञ्चिरेकदा तस्मिन्निम्बार्कस्याश्रमे शुभे॥
समागत्याह भो ब्रह्मन् प्राप्तोऽहं क्षुधयाऽन्वितः।
यावत्सूर्य्यः स्थितो व्योम्नि तावन्मां भोजय द्विज॥
इति श्रुत्वा तथेत्युक्त्वा ददौ तस्मै च भोजनम्।
तदा तु भगवान् सूर्य्यो ह्यस्ताचलमुपागतः॥
मुनिना ऋषिणा तेन निम्बवृक्षे तदा शुभे।
स्थापितं तेजसा स्वेन तेजस्तत्त्वं सुदर्शनम्।
तत्तेजः सूर्यसङ्काशं दृष्ट्वा वेधाः स्मयान्वितः।
भिक्षुवेषधरं बालं मुनिं सूर्य्यमिवापरम्॥
ननाम दण्डवद्भूमौ तपसा तस्य तोषितः।
उवाच वचनं रम्यं साधु साध्विति पूजयन्॥
निम्बादित्य इति ख्यातो वसुधायां भविष्यसि॥"

'सुदर्शनो द्वापरान्ते' इत्यादि अवतरणसे श्रीनिम्बार्कभगवान् का द्वापर युगके अन्तमें अवतीर्ण होना सिद्ध होता है।

श्रीवेदव्यासजी भविष्यपुराणान्तर्गतवेधविषयक विचारमें लिखते हैं—

"निम्बार्को भगवान्येषां वाञ्छितार्थप्रदायकः।
उदयव्यापिनी ग्राह्या कुले तिथिरुपोषणे॥"

अर्थात् जिनकी परम्परामें श्रीनिम्बार्कभगवान् ही इच्छितार्थ प्रदान करने वाले हैं उनको (श्रीनिम्बार्कानुयायियोंको) एकादशी आदि व्रतों में उदयव्यापिनी तिथि ग्रहण करना चाहिये। स्मार्त्तश्रेष्ठ श्रीकमलाकरभट्टजीने भी उपर्य्युक्त श्लोक स्वरचित 'निर्णयसिंधु' में उद्धृत किया है जिससे श्रीनिम्बार्कभगवान् श्रीवेदव्यासजीके समकालीन सिद्ध होते हैं।

श्रीमदाद्याचार्य्यके पुराणप्रसिद्ध अन्यान्य नाम भी उपलब्ध होते हैं तथा यह भी सिद्ध होता है कि आप द्वापरयुगके अन्तमें अवतीर्ण हुए थे। श्रीहरिके प्रिय आयुध सुदर्शन चक्रका अवतार होनेसे श्रीहरिप्रियाचार्यनाम ब्रह्मवैवर्त्तपुराणमें मिलताहै। एकादशी वेधविषयक विचारप्रसङ्गमें श्रीशौनकजीका वाक्यहै "कपालवेधमित्याहुराचार्य्या ये हरिप्रियाः।" उपर्य्युक्त शौनकवाक्यसे स्पष्ट है कि श्रीनिम्बार्क भगवान् शौनकजीके पूर्व वर्त्तमान थे।

श्रीमद्भागवत दशमस्कंध अध्याय ८७ में आरुणि (अरुणस्यापत्यं पुमान् आरुणिः) नाम उपलब्ध होता है। यथा—"उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धति हृदयमारुणयो दहरम्" इ० ॥ पुनश्च, भागवत ६ स्कन्ध १५ अध्याय चित्रकेतु आख्यानमें सुप्रसिद्ध ऋषियों के नामोल्लेख में भी श्री आरुणि ऋषिका नाम दिया गया है।

"चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः। × × ×
वसिष्ठो भगवान्रामः कपिलो बादरायणिः।
दुर्वासा याज्ञवल्क्यश्च जातूकर्ण्यस्तथाऽऽरुणिः ॥"

अपरञ्च देवर्षिवर्य्य श्रीनारदभगवान् स्वरचित 'भक्तिसूत्र' नामक ग्रन्थमें भक्तिके प्रवर्त्तक मुख्याचार्यों की गणना करते हुये श्रीमन्निम्बार्कभगवान् को आरुणि (अर्थात् अरुण मुनिका पुत्र) कहतेहैं। यथा—

"इत्येवं वदन्ति जनजल्पनिर्भया एकमताः कुमारव्यासशुकशाण्डिल्यगर्गविष्णुकौण्डिन्यशेषोद्धवारुणिबलिहनुमद्विभीषणादयो भक्त्याचार्य्याः"।

पुनः श्रीमद्भागवत १० स्कंध ६ माध्याय ७ मश्लोक—

"वसिष्ठ इन्द्रः प्रमदस्त्रितो गृत्समदोऽसितः।
कक्षीवान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः॥"

यहां पर सुदर्शन नाम इसलिये आया है कि आप (श्रीमन्निम्बार्काचार्य ) श्रीसुदर्शन चक्रके अवतार हैं। यह प्रसङ्ग उस समय का है जब शरशय्यापर पड़े हुये श्रीभीष्मजीका दर्शन करने के लिये श्री० युधिष्ठिर महाराज श्रीकृष्णभगवान् के सहित कुरुक्षेत्रमें गये हुये थे तथा उनके साथ अन्यान्य ऋषिमुनिभी श्रीभीष्मजीका दर्शन करने को पधारे थे। ) अस्तु उपर्य्युक्त प्रमाणों से सिद्ध है कि श्रीनिम्बार्क भगवान् श्रीवेदव्यासजी तथा श्रीकृष्णभगवान् के समयमें वर्त्तमान थे तथा श्रीहरिप्रियाचार्य्य, आरुणि एवं सुदर्शन इत्यादि नामों से विख्यात थे।

अब संक्षेपमें श्रीनिम्बार्क भगवान् की आचार्य्य परम्परा का वर्णन किया जाता है। जिस भागवत धर्म्मको भगवदाज्ञासे इस मर्त्यलोकमें श्रीनिम्बार्क भगवान् ने विशेषरूपसे प्रवर्तित किया, उस मतके प्रथम प्रवर्त्तक श्रीविष्णुभगवान् ने हंसावतार धारण कर श्रीसनकादिक महर्षियों को स्वीय तत्त्वोपदेश प्रदान किया था। इसका प्रमाण देखिये-श्रीमद्भागवतके एकादशस्कन्धमें श्रीकृष्णभगवान् ने श्री० उद्धवजीसे श्रीसनकादिकों को स्वकीय शिष्य कहा है। यथा-"एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः" अर्थात् हमारे शिष्य सनकादिकोंने यह योग कथन किया है। एवं सनकादिकों नेही उपर्य्युक्त तत्त्वज्ञान श्रीनारदभगवान् को प्रदान किया था, यह बात "छान्दोग्योपनिषद्" के भूमविद्याप्रकरणमें वर्णित है। यथा-"सोऽहं भगवः शोचामि तं मां भगवाञ्छोकस्य पारं तारयतु, तस्म मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः॥" अर्थात् श्रीमन्नारदभगवान् श्रीमत्सनत्कुमार भगवान्से सविनय प्रार्थना करतेहैं कि हे भगवन्! हम शोक से संतप्त हैं आप हमको शोकरूप समुद्रसे पार कीजिये। यह सुनकर श्री सनत्कुमारजीने निखिल पापों से रहित श्रीनारदजीको तत्त्वोपदेश किया, तथा वही तत्त्वज्ञान श्रीनारद भगवान् से श्रीनिम्बार्काचार्य्यजीने प्राप्त किया था। यथा वेदान्त-पारिजात-सौरभे भूमाधिकरणे-"परमाचार्य्यैः कुमारैरस्मद्गुरवे श्रीमन्नारदायोपदिष्टो "भूमात्वे व विजिज्ञासितव्यः" इत्यत्र भूमा प्राणो न भवति, किन्तु पुरुषोत्तमः॥"

अर्थात् हमारे परमाचार्य्य श्रीसनकादि महर्षियों ने हमारे गुरु

श्रीमन्नारदभगवान् को भूमोपासनाका उपदेश किया था, वहां "भूमा" शब्द "प्राण" का वाचक नहीं, किन्तु श्रीपुरुषोत्तम (परमात्मा) का वाचक है। श्रीविष्णुयामलमें भी उपर्युक्त परम्पराक्रम वर्णित है। यथा—

"नारायणमुखाम्भोजान्मन्त्रस्त्वष्टादशाक्षरः।
आविर्भूतः कुमारैस्तु गृहीत्वा नारदाय च॥
उपदिष्टः स्वशिष्याय निम्बार्काय च तेन तु॥" इत्यादि।

अब उन विद्वानों के मतका निराकरण किया जाता है जो श्रीनिम्बार्क भगवान का प्राकट्य श्रीशङ्कराचार्यके पश्चात् मानते हैं। श्रीशङ्कर के पूर्ववर्त्ती श्रीगौडपादाचार्य गौडपादीय कारिका के अद्वैताख्य तृतीय प्रकरणमें लिखते हैं–

"अद्वैतं परमार्थो, हि द्वैतं तद्भेद उच्यते। तेषामुभयथा द्वैतं तेनायं न विरुद्धयते॥ "तेषामुभयथा द्वैतं" इस वाक्य से ज्ञात है कि द्वैताद्वैत सिद्धान्त गौडपाद से प्रथम का है, यदि द्वैताद्वैतसिद्धान्त प्राचीनतर न होता तो वे ( गौडपादाचार्य ) किस प्रकार उसका उल्लेख करते। अतः अन्यथानुपपत्ति प्रमाणके द्वारा द्वैताद्वैतप्रवर्त्तक श्रीमदाद्याचार्य श्रीभगवन्निम्बार्कमहामुनीन्द्रका प्राचीनतमत्व सिद्ध होताहै।

कुछ लोग आक्षेप करते हैं कि श्रीशङ्कराचार्यजीने जिस द्वताद्वैत ( भेदाभेद ) सिद्धान्तका खण्डन किया है वह श्रीभास्करभट्ट का औपाधिक भेदाभेद सिद्धान्त है, श्रीनिम्बार्काचार्य्यजीका स्वाभाविक भेदाभेद नहीं। इसका उत्तर यह है कि श्रीशङ्कराचार्य के पहले श्रीभास्करभट्टका अस्तित्वही नहीं था क्योंकि भास्करभट्ट ने शङ्कराचार्य के मायावाद का ( स्वरचित ब्रह्मसूत्र–भाष्यमें ) खण्डन किया है। तथा प्रारम्भके द्वितीय श्लोक मेंही कहाहै–

सूत्राभिप्रायसंवृत्त्या स्वाभिप्रायप्रकाशनात्।
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये॥

सर्व प्रथम श्रीनिम्बार्क भगवान् नेही ब्रह्मसूत्रका संक्षिप्त भाष्य लिखा है क्योंकि अन्यान्य भाष्यकारों का जन्म श्रीनिम्बार्क भगवान् के पश्चात् ही हुवा है।

"श्रीनिम्बार्को भगवानेवमौदुम्बराभिधम्।
अनुगृह्य ऋषेरादौ जगाम वदरीश्रमम्॥

निवसन्तत्र व्यासेन साकञ्च कतिचित्समाः ।
चकार ब्रह्मसूत्रस्य व्याख्यानं प्रथमं प्रभुः ॥

बहुत क्या लिखूं । अंग्रेजीशिक्षासे मोहान्ध आधुनिक विद्वन्नाम-धारी लोग जो शङ्कराचार्यका अस्तित्व श्रीनिम्बार्क भगवान् से पूर्व मानते हैं, वे यातो अपने कथनको सप्रमाण सत्य सिद्ध करें अन्यथा उनका कथन उन्मत्त प्रलापही समझा जायगा ।

ग्रन्थरचना ॥

श्रीमन्निम्बार्काचार्य्यकृत जिन ग्रन्थोंका अब तक संधान लगा है उनका विवरण नीचे लिखा जाता है ।

१-"वेदान्त पारिजात सौरभ" नामक ब्रह्मसूत्रवाक्यार्थ ।
२-"वेदान्तकामधेनु-दशश्लोकी" ( जिसके ऊपर श्रीपुरुषोत्तमाचार्यजीने वेदान्तरत्नमञ्जूषा नामक विस्तृत संस्कृतटीका लिखी है । एवं अन्यान्य टीकायें भी बनी हैं । )
१-"रहस्य-षोडशी" (श्रीगोपालमन्त्रकी सुन्दर व्याख्या)-जिसके ऊपर श्रीश्रीसुन्दरभट्टजीने मन्त्रार्थरहस्य नामक सुन्दरविस्तृत टीका लिखी है ।
४-"सदाचार-प्रकाश" नामक कर्मयोग-ग्रन्थ ।
५-"प्रपत्ति चिन्तामणि" नामक भगवत्प्रपत्तिविषयक ग्रन्थ ।
६-"श्रीमद्भगवद्गीता भाष्य ।"
७-"प्रातः स्तवम्" ( प्रातः उठकर पाठकरनेका स्तोत्र ) ।

उपरिलिखित ग्रन्थों में से प्रथम, द्वितीय एवं तृतीय संख्यक ग्रन्थ संस्कृत भाष्यों सहित मुद्रित हो चुके हैं शेष ग्रन्थ अभी तक अनुपलब्ध हैं केवल 'सदाचार प्रकाश' के कतिपय पत्रा वङ्गदेशस्थ अरुणघटा नामक स्थान में उपलब्ध हुये हैं ।

श्रीमन्निम्बार्क विरचित वेदान्त पारिजातसौरभ (ब्र० सू० भाष्य) यद्यपि अत्यन्त संक्षिप्त है तोभी उसकी संस्कृत सरल, लम्बे समासोंसे रहित होने के कारण अत्यन्त प्राचीन शैलीकी है, एवं श्रीकौस्तुभभाष्य की संस्कृत भी अत्यन्त सरल तथा प्राचीन ढङ्ग की है । इन बातों से भी भाष्यद्वय की प्राचीनता सिद्ध होती है, एवं यह भाष्य सरल और विस्तृत खण्डनमण्डन से रहित होने के कारण मुमुक्षुवों को परमोपयोगी है ।

श्रीमद्भगवन्निम्बार्कपादपद्माश्रित श्रीश्रीनिवासाचार्य्यजी ने ब्रह्म-सूत्र का वेदान्त-कौस्तुभनामक भाष्य निर्म्माण किया है, इसका कारण यह ज्ञात होता है कि श्रीमद्वेदान्त-पारिजात-सौरभ अत्यन्त संक्षिप्त होने से गम्भीराशय है अतः अल्पमति कलियुगीजीवों के उपकारार्थ श्रीश्रीनिवासाचार्यजी ने (श्रीमन्निम्बार्क भगवान् की आज्ञा से) पा० सौरभ की अपेक्षा अत्यन्त सरल तथा अधिक विस्तृतव्याख्या करके उसका 'वेदान्त-कौस्तुभ' नाम रक्खा ।

श्रीश्रीनिवासाचार्य्यजीने अपने वे० कौस्तुभनामक ब्रह्मसूत्रभाष्य में मायावाद सिद्धान्तका नामोल्लेखभी नहीं किया है जिससे स्पष्ट सिद्ध होता है कि द्वैताद्वैत सिद्धान्त उपर्य्युक्त मायावाद से अत्यन्त प्राचीन है । यदि मायावादसिद्धान्त श्रीश्रीनिवासाचार्य्यजीके समय में प्रचलित होता तो श्रीआचार्य्यप्रवर अवश्य उसका निराकरण करते । इधर मायावाद आदि सिद्धान्तों के प्रवर्त्तकाचार्य्योंने अपने ग्रन्थोंमें द्वैताद्वैत सिद्धान्तके खण्डन का निष्फल प्रयत्न किया है इससे भी उसकी (द्वैताद्वैत की) प्राचीनता स्पष्ट सिद्ध होती है । यदि यहां पर इतर सम्प्रदायाचार्य्योंके ग्रन्थों से (द्वैताद्वैत अथवा भेदाभेद के खण्डन विषयक) उद्धरण लिखने लगें तो बहुत विस्तार हो जायगा, अतएव केवल एक उद्धरण देकर यह प्रसङ्ग समाप्त किया जाता है । बृहदारण्यके माध्वभाष्ये–

भेदाभेदसमुद्दिष्टो विनाशो यत्र दृश्यते ।
एकस्मिन्विद्यमानोऽपि तयोरेकस्य कस्यचित् ॥
अविनाभावनियमो यत्राभेदन्तु तत्र हि ।
अभेदश्च स्वभिन्नेन भेदाभेदस्तु तत्र च ॥
भेदाभेदौ न तु क्वापि विष्णोरस्ति कदाचन ।
भेद एव तु जीवाद्यैः केवलाभेद आत्मनि ॥ (अ० ३।५)

श्रीश्रीनिवासाचार्य्यजी श्रीनिम्बार्कभगवान् के पट्टशिष्यथे और श्रीनिम्बार्कभगवान् का (प्राकट्य) समय द्वापरान्तमें निर्द्धारित किया जाचुका है, अतः श्रीश्रीनिवासाचार्य्यजीके समयनिरूपणकी विशेष आवश्यकता नहीं है, केवल इतना ही लिखना पर्य्याप्त होगा कि युधि० सं० ८८४ में श्रीकौस्तुभभाष्यकार इस धराधाममें वर्त्तमानथे ।

अस्तु यह ग्रन्थ (भाष्यद्वयोपेत-ब्रह्मसूत्र) जगद्विजयी श्रीकेशव-

काश्मीरिभट्टविरचित वे० कौस्तुभ-प्रभासहित देवकीनंदन प्रेस से प्रायः २७ वर्ष पहले "भाष्यत्रयोपेतं श्रीब्रह्मसूत्रम्" नामसे वर्द्धवानके महन्त श्रीमन्मधुसूदनशरणदेवजीके साहाय्यसे वंशीवट निवासी श्री० पं० किशोरदासजी द्वारा प्रकाशित हुवा था परन्तु सम्प्रति यह ग्रन्थ अप्राप्य है। अतः अस्मदाचार्य परमपूज्य महन्त पण्डित श्री १०८ श्री श्रीकल्याणदासजी महाराजने इसको (भाष्यद्वयोपेत ब्रह्मसूत्रको) पुनः प्रकाशित करानेकी इच्छा से इसकी एक कापी ( प्रेसमें देनेके लिये ) प्रस्तुत करनेकी ( कार्तिक सं० १९८८ वि० में ) मुझे आज्ञा दी। इस आज्ञाको सादर शिरोधार्य करके मैंने फाल्गुन में कापी लिख कर तैयार करदी।

अब यह ग्रन्थ मुद्रित होकर पाठकों के समक्ष उपस्थित है। यद्यपि श्रीगुरुवर्य्यकी तथा मेरी यह हार्दिक अभिलाषा थी कि ग्रन्थ अत्यन्त शुद्धरूपमें प्रकाशित हो तोभी दृष्टिदोषसे कतिपय स्थलोंमें पाठ छूट जानेसे अशुद्धियां रह गई हैं, अतः पाठकों की सुविधा के लिये शुद्धाशुद्धपत्र भी पुस्तकान्त में प्रकाशित कर दिया गया है और पाठकों से निवेदन है कि वे प्रथम शुद्धाशुद्ध-पत्र की सहायता से ग्रन्थ को शुद्ध करके पश्चात् उसका अध्ययन करें तथा प्रकाशकका परिश्रम सफल करें। यदि इस ग्रन्थको पाठकोंने अपनाया तो वे० कौस्तुभ-प्रभाको भी प्रकाशित करने की चेष्टा की जायगी। किमधिकं विशेष्वलमिति विस्तरेण।

---

| | |
|---|---|
| भाद्रशुक्ला<br>श्रीराधाऽष्टमी<br>सं० १९८९ वि०<br>श्रीवृन्दावन धाम<br>पानीघाट ॥ | श्री १०८ पं० कल्याणदासपाद-<br>पद्माश्रितो राधिकादासः ।<br>[ पानीयघाट ] वृन्दावन<br>वास्तव्यः ॥ |

ॐ श्रीमद्राधागोपालाभ्यां नमः ।

श्रीभगवन्निम्बार्कमहामुनीन्द्राय नमः ।

# श्रीब्रह्मसूत्रम् ।

## भाष्यद्वयोपेतम् ।

### श्रीश्री भगवन्निम्बार्कविरचित वेदान्तपारिजात सौरभाख्यब्रह्मसूत्रवाक्यार्थः ।

सू० अथातो ब्रह्मजिज्ञासा १ । १ । १ ॥

अथाधीतषडङ्गवेदेन कर्मफलक्षयाक्षयत्वविषयकविवेकप्रकारकवाक्यार्थजन्यसंशयाविष्टेन तत एव जिज्ञासितधर्ममीमांसाशास्त्रेण तन्निश्चितकर्मतत्प्रकारतत्फलविषयकज्ञानवता कर्मब्रह्मज्ञानफल(योः) सान्तत्वसातिशयत्वनिरतिशयत्वविषयकव्यवसायजातनिर्वेदेन भगवत्प्रसादेप्सुना तद्दर्शनेच्छालम्पटेनाचार्यैकदेवेन श्रीगुरुभक्त्येकहार्देन मुमुक्षुणाऽनन्ताचिन्त्यस्वाभाविकस्वरूपगुणशक्त्यादिभिर्बृहत्तमो यो रमाकान्तः पुरुषोत्तमो ब्रह्मशब्दाभिधेयस्तद्विषयिका जिज्ञासा सततं सम्पादनीयेत्युपक्रमवाक्यार्थः॥१॥

### श्रीश्रीनिवासाचार्यविरचित वेदान्तकौस्तुभाख्य-ब्रह्मसूत्रभाष्यम् ।

श्रीहंसं सनकादीन्देवर्षिं निम्बभास्करञ्च भजे ।
कृपयैषां श्रीकृष्णे परमात्मनि नो भवतु भक्तिः॥ १ ॥

श्रीकृष्णपादयुगलं शिरसा नमामि,
यत्रान्वितः श्रुतिगणो न विरोधमेति ।
यद्ध्यानयोगनिरताश्च यदाप्नुवन्ति
केशेन्द्रवन्द्यमनिशं मनसा गिरा च॥ २ ॥

इह खलु सर्वेश्वरः सर्वात्मा सर्वजगदभिन्ननिमित्तोपादानकारणरूपो भगवान् पुरुषोत्तमः श्रीवासुदेवः पाराशर्य्यात्मना नानाकुतर्कविमोहितान् जीवान्वीक्ष्य तेषु स्वज्ञानभक्ती द्रढयितुं निःसंशयतया परब्रह्मप्रतिपत्तये शारीरकमीमांसाख्यं वेदान्तशास्त्रं सूत्रयामास । अथ श्रीसनत्कुमारसन्ततिप्रवर्त्तकः परमकारुणिको मुमुक्ष्वनुग्रहाय भगवान् श्रीमन्निम्बार्कस्तद्व्याख्यानं शारीरकमीमांसावाक्यार्थरूपेण वेदान्तपारिजातसौरभाख्यमतिगूढं कृतवान् । अथ तु तदाज्ञया तदुक्तवर्त्मना तदनुग्रहकामेण तच्छिष्येण मया मृदुमितपदो वेदान्तकौस्तुभस्तद्भावार्थप्रकाशको विदुषामुपकाराय विरच्यते । ननु धर्मजिज्ञासयैवेष्टसिद्धौ किं ब्रह्मजिज्ञासयेत्यत्र धर्मस्यानित्यफलदत्वान्निरतिशयानन्तानन्दप्राप्तये तज्जिज्ञासा कर्त्तव्येत्युच्यते ।

अत्राथशब्दः आनन्तर्य्ये, नचार्थान्तरे, पूर्वनिर्वचनाभावात् । न च "ओङ्कारश्चाथशब्दश्च, द्वावेतौ ब्रह्मणः पुरा ॥

कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभा"-

वितिवचनादिह मङ्गलार्थ इति वाच्यम् । अस्य शास्त्रस्य शब्दतोऽर्थतश्च मङ्गलरूपत्वेन मङ्गलान्तरनिरपेक्षत्वात् । श्रुत्यैव मङ्गललाभाच्च । एवमन्येषामप्यथशब्दार्थानामधिकारादीनामिहानुपयोगाच्च । किञ्चार्थविशेषविवक्षया पठितः शब्दोऽर्थान्तरे प्रयोक्तुमशक्यः । आनन्तर्य्यमस्येह विवक्षितोऽर्थः । अत इत्यस्य पूर्ववृत्तपरामर्शित्वात् । तस्मादथशब्द आनन्तर्य्यार्थक एव । अत इतिशब्दो हेत्वर्थः ।

"नावेदविन्मनुते तं बृहन्तम् द्वे ब्रह्मणी वेदितव्ये, शब्दब्रह्मपरं च यत्, शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती"-त्यादिश्रुतिस्मृतिभ्यां शब्दब्रह्मनिष्ठगम्यं वक्ष्यमाणलक्षणं तत्त्वं

ब्रह्मशब्दवाच्यम् । जिज्ञासाशब्द इष्यमाणब्रह्मज्ञानेच्छावाचकः । यद्यप्यथानन्तरमतो हेतोर्ब्रह्मजिज्ञासा जायते इति क्रियापदाध्याहारोऽपि युज्यते, प्रेक्षावतां विशिष्टेऽर्थे स्वतो जिज्ञासासम्भवात् । तथापि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः स विजिज्ञासितव्य"इत्यादिविषयवाक्यसारूप्यात्कर्त्तव्येत्यध्याहृतेन विध्यर्थकपदेनाऽन्वयो बोध्यः । "मुमुक्षुर्भूत्वाऽऽत्मन्येवात्मानं पश्येदिति" श्रुत्यनुसारि मुमुक्षुपदं तृतीयान्तमाक्षिप्यते इति पदयोजना । तत्राथानन्तरमिति धर्मजिज्ञासाविषयभूतधर्मस्वरूपतत्साधनतदनुष्ठानप्रकारतत्फलविषयकज्ञानानन्तरम् "स्वाध्यायोऽध्येतव्य" इति विधीयमानसंस्कारादिपूर्वकं साङ्गं वेदमधीत्य तत्र कर्मफलस्य क्षयाक्षयत्वविधायकानि "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति । अपाम सोमममृता अभूम । यत्र नोष्णं न च शीतं स्यान्न ग्लानिर्नाप्यरातय" इत्यादीनि, "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते । अन्तवदेवास्य तद्भवति । नह्यध्रुवैः प्राप्यते ध्रुवम् । नास्त्यकृतं कृतेन । प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादीनि परस्परविरुद्धप्रकारकाणि वाक्यानि सामान्यतो दृष्ट्वा जातसंशयो विशेषतो निर्णेतुमनीशस्तन्निवृत्तये धर्मजिज्ञासायां प्रवृत्तस्तया सम्यङ्निर्णीतकर्मस्वरूपतदनुष्ठानप्रकारतत्फलकस्तथाभूतज्ञानमापद्यते । तदनन्तरमित्यर्थः । अतो हेतोरिति कर्मफलस्य सान्तत्वसातिशयत्वनिश्चयात् "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोक" इति श्रुतेः, "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने"ति स्मृतेश्च । ब्रह्मज्ञानस्य च निरतिशयानन्तफलकत्वनिश्चयात्, "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था

विद्यतेऽयनाय । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः, तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति । ज्ञात्वा देवं मुच्यते सर्वपाशैः । यस्तमात्मानमनुविद्य विजानाति स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् । अङ्गुष्ठमात्रं पुरुषं मध्ये आत्मनि संस्थितम्, तं ज्ञात्वा मृत्युमत्येति नान्यः पन्था विमुक्तये । बहवो ज्ञानतपसा पूता मद्भावमागताः । ज्ञानवान्मां प्रपद्यते । ज्ञात्वा मां शान्तिमृच्छती"त्यादिश्रुतिस्मृतिभ्यः । "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः । असूर्य्या नाम ते लोका अन्धेन तमसा वृताः, तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जना" इत्यादिश्रुतिभ्यः अनात्मज्ञस्य कृपणत्वात्मघ्नत्वादियोगनिन्दाश्रवणाच्च ब्रह्मजिज्ञासा कर्त्तव्येति यावत् । केनेत्यपेक्षायां एभ्यो हेतुभ्यः कर्मफलादौ जातनिर्वेदेन श्रीभगवद्दर्शनस्य मोक्षासाधारणकारणत्वं श्रुत्वा तज्जन्यव्यवसायजन्यदिदृक्षाग्रहगृहीतेन श्रीपुरुषोत्तमप्रसादैकेप्सुना आचार्य्यैकदेवेन गुरूपसन्नेन गुरुभक्त्येकहार्द्देन मुमुक्षुणेत्यन्वेति । "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः । पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः, क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम् । तमक्रतुं पश्यति वीतशोकः । धातुः प्रसादान्महिमानमीशम् । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः । श्रोत्रियं ब्रह्मनिष्ठम्, तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।

येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् । आचार्यदेवो भव । यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन" इत्यादिश्रुतिभ्यः । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा, ब्रह्मण इति कर्मणि षष्ठी "कर्तृ-कर्मणोः कृती"ति शास्त्रात् । ब्रह्मजिज्ञासेति कर्मषष्ठ्या समासः "कृद्योगा च षष्ठी समस्यते" इत्युक्तेः । ब्रह्म चाचिन्त्यानन्त-निरतिशयस्वाभाविकबृहत्तमस्वरूपगुणाद्याश्रयभूतः सर्वज्ञः सर्व-शक्तिः सर्वेश्वरः सर्वकारणरूपः समानातिशयशून्यः सर्वव्या-पकः सर्ववेदैकवेद्यः श्रीकृष्ण एव "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" । "यः सर्वज्ञः सर्ववित्, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । एष सर्वेश्वरः, तमीश्वराणां परमं महेश्वरं, तं देवतानां परमञ्च दैवतं, न तस्य कार्यं करणं च विद्यते । न तत्समश्चाभ्यधिकश्च दृश्यते । प्रधानक्षेत्रज्ञपतिर्गु-णेशः । एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कृष्ण एव परो देवस्तं ध्यायेत् । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! । वेदैश्च सर्वै-रहमेव वेद्य" इत्यादिश्रुतिस्मृतिभ्यः । तद्विषयकमेव ज्ञानं तथा-भूतेष्यमाणज्ञानविषयिकैवेच्छेत्यर्थः । तथाच श्रूयते—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादि बृहदारण्यके । "भूमा त्वेव विजिज्ञासितव्य" इति छान्दोग्ये च । अरे मैत्रेयि! आत्मा द्रष्टव्यः । अत्र तव्यप्रत्ययः अर्हार्थक एव, "अर्हे कृत्यतृचश्चे"ति सूत्रात् । ब्रह्मसाक्षात्कारस्य "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः, क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे। निरञ्जनः परमं साम्यमुपैति । अस्य महिमानमिति वीतशोकः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मित्यादिवाक्यैर्मोक्षा-

न्तरङ्गोपायतया सिद्धत्वेन विधेयत्वाभावात् । तथाच वाक्यान्तरप्राप्तं ब्रह्मसाक्षात्कारलक्षणं मोक्षासाधारणोपायं दर्शनमुद्दिश्य, तदन्तरङ्गोपायभूतन्निदिध्यासनमत्र विधीयते । तदेव ध्यानज्ञानपराभक्तिध्रुवास्मृत्यपरपर्य्यायभूतं ज्ञानशब्देन सूत्रयामास भगवान्बादरायणः, सूत्रविषयवाक्ययोरेकार्थत्वनियमात् । तत्रापि विषयवाक्यस्य मूलरूपत्वेन स्वतः प्रामाण्याद्बलीयस्त्वं तदनुसारेणैव सूत्रार्थो नेयः, अन्यथा तयोर्विषयविषयिभावानुपपत्तेः । श्रवणमननयोर्निदिध्यासनोपायत्वेन विनियोगः, तयोरपि परम्परया मोक्षसाधनोपायत्वात् । तत्र वेदान्तवाक्यानां भगवत्स्वरूपगुणादिप्रतिपादनपरत्वं निश्चित्य, तत्प्रतिपाद्यं ध्येयस्वरूपादिकं साक्षात्पश्यत आचार्यस्य मुखात्तदनुभूतवाक्यार्थस्य ग्रहणं श्रवणम् । श्रुतस्य चोपदिष्टार्थस्य स्वानुभवविषयीकरणाय शास्त्रानुकूलयुक्तिभिर्विचारविशेषो मननम् । मननाविषयस्यार्थस्य साक्षात्कारासाधारणसाधनमनवरतध्यानं निदिध्यासनम् । तथाचोक्तलक्षणश्रवणादिसाध्यनिदिध्यासनस्यात्यन्ताप्राप्तत्वादपूर्वविधिरेवायमिति बोध्यम् । भूमेत्यस्य व्याख्या तु भूमेति सूत्रव्याख्याने द्रष्टव्या । फलितार्थस्तु अनादिबद्धेन जीवेन दैवाज्जन्मसमये मधुसूदनावलोकितेनानुष्ठितसाधनकदम्बेनोपासितगुरुचरणेन वेदान्तवेद्यब्रह्मश्रवणमनननिदिध्यासनैर्लब्धतद्दर्शनेन मुमुक्षुणा मुक्तिः सम्पादनीयेति । मुक्तिः कार्यकारणप्रकृतिरूपबन्धनिवृत्तिपूर्विका भगवद्भावापत्तिः "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यत" इति श्रुतेः, "तन्निष्ठस्य मोक्षोपदेशात् । अस्मिन्नस्य च तद्योगं शास्ती"त्यादिसूत्रेभ्यश्च, "निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते । बहवो ज्ञानतपसा

पूता मद्भावमागता" इत्यादिस्मृतिभ्यः । भावपदं च स्वयमेव व्याख्यातं श्रीमुखेन—"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता" इति, एतत्फलाध्याये निपुणं वक्ष्यामः ।

अथ किमात्मको मुमुक्षुः किमात्मकं च तद्बन्धनमित्याकाङ्क्षायां मुमुक्षूणां सुखेन शास्त्रप्रवेशाय च शास्त्रतत्त्वं विचार्यते । तत्त्वं तावत्त्रिविधम्–चिदचिद्ब्रह्मभेदात् । सूत्रेणापि जिज्ञास्यं जिज्ञासुस्तदज्ञानमूलभूता त्रिगुणाऽर्था माया चेति तत्त्वत्रयस्योक्तत्वात्, अन्यथा जिज्ञासानुपपत्तेः । "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत् । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते, उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इत्यादिश्रुतिस्मृतिभ्यश्च । तत्राचिद्वर्गभिन्नो ज्ञानस्वरूपो ज्ञातृत्वकर्तृत्वादिधर्मकोऽहमर्थरूपो भगवदायत्तस्वरूपस्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरं भिन्नो बन्धमोक्षार्हश्चित्पदार्थः । यथाहुः "ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम् । अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः । अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात् । मुक्तञ्च भक्तं किल बद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्य"मिति । "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः । यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव । एवम्वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव । अत्रायं पुरुषः स्वयंज्योतिर्भवति । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा । अथ योऽयं वेद जिघ्राणीति स आत्मा कतमः, योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः, पुरुष एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुषः । नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वान्नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नहि मन्तुर्मतेर्विपरि-

लोपो विद्यतेऽविनाशित्वान्नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् । विज्ञातारमरे केन विजानीयात् । जानात्येवायं पुरुषः, न पश्यो मृत्युं पश्यति, न रोगं नोत दुःखतां, स उत्तमः पुरुषो नोपजनं स्मरन्निदं शरीरम् । एवमेव परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! । ज्ञोऽत एव कर्त्ता शास्त्रार्थवत्त्वात् । अहं वै त्वमसि देवते सोऽहं ब्रह्मास्मीति मृत्युमृत्युं नमाम्यहम् । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । स एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते । स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि । जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः । अणुर्ह्येष आत्माऽयं वा एते सिनीतः पुण्यं पापम् । वालाग्रशतभागस्य शतधा कल्पितस्य च, भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते । बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः । उत्क्रान्तिगत्यागतीनाम् । नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् । तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । अंशो नानाव्यपदेशात् । अस्ति खल्वन्यो परो भूतात्मा योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिना यस्य सम्मूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारन्नापश्यद्गुणैः सूप्यमानः कलुषीकृतश्चेति । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । निरञ्जनः परमं साम्यमुपैति । न स पुनरावर्त्तते । अनावृत्तिः शब्दा”दित्यादीनि श्रुतिसूत्राणि । अचित्पदार्थस्त्रिविधः—प्राकृताप्राकृतकालभेदात् । यथाहुः—“अप्रा-

कृतं प्राकृतरूपकञ्च कालस्वरूपं तदचेतनम्मतम्, मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्रे"ति । तत्र गुणत्रयाश्रयभूतं द्रव्यं प्राकृतं, तच्च नित्यं परिणामादिविकारि च, "गौरनाद्यन्तवती जनित्री भूतभाविनी सितासिता च रक्ता च सर्वकामदुघा विभोः । अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपा" इत्यादिश्रुतिभ्यः । त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् । अचेतना परार्था च नित्या सततविक्रिया, त्रिगुणं कर्मणां क्षेत्रं प्रकृते रूपमुच्यत" इत्यादिस्मृतिभ्यश्च । "तदधीनत्वादर्थवत् । चमसवदविशेषात् । ज्योतिरुपक्रमात्तु तथा ह्यधीयते एके" इत्यादिसूत्रेभ्यः । गुणाश्च सत्त्वरजस्तमांसि । तदेव हि स्वगुणैः क्षेत्रज्ञानां देहेन्द्रियमनोबुद्ध्यादिरूपेण परिणतं सज्जीवबन्धनहेतुर्मोक्षप्रतिबन्धकतया चोच्यते । महदादिब्रह्माण्डान्तस्य जगतः कारणीभूतं च तत्कार्यं चानित्यं बोध्यम् । अथाप्राकृतं नाम त्रिगुणप्रकृतिकालात्यन्तभिन्नमचेतनञ्च प्रकृतिमण्डलभिन्नदेशवृत्तिनित्याविभूतिविष्णुपदपरमव्योमपरमपदब्रह्मलोकादिपदाभिधेयम् "आदित्यवर्णं तमसः परस्तात् । योऽस्याध्यक्षः परमे व्योमन् । तद्विष्णोः परमं पदम् सदा पश्यन्ति सूरयः । विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः, सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । अकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि । न स पुनरावर्त्तते । अनावृत्तिः शब्दात्" इत्यादिश्रुतिसूत्रेभ्यः । "यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम् । अनादिनिधनं देवं प्रभुं नारायणं हरिम् । ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते । देवाश्च यं न पश्यन्ति दिव्यं तेजोमयं पदम् । अत्यर्कानलसन्दीप्तं स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन्दुष्प्रेक्ष्यं देवदानवैः । यतयस्तत्र गच्छन्ति देवं नारायणं हरिम् ।

वरेण्यं तपसा युक्ता भाविताः कर्मभिः शुभैः । योगसिद्धा महात्मानस्तमोमोहविवर्जिताः । तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ! । स्थानमेतन्महाराज ! ध्रुवमक्षयमव्ययम् । ईश्वरस्य सदा ह्येतत्प्रमाणं च युधिष्ठिर ! । ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् । शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः । ज्ञानविज्ञानिनः केचित्परं पारं तितीर्षवः । अतीव तत्पदं पुण्यं पुण्याभिजनसम्भृतम् । यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च ॥ ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्वताः ।" इत्यादिमहाभारतस्थश्लोकेभ्यश्च । तत्रैव गीतासु "मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वत"मिति भगवद्वचनाच्च । तच्च भगवदीयानादिसङ्कल्पात्तस्य तदीयानां नित्यमुक्तानां च भोग्यादिरूपेणानेकरूपं परिणामादिविक्रियानर्हं च कालातीतत्वात् "कलामुहूर्त्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः । तवाष्टगुणमैश्वर्यं नाथ ! स्वाभाविकं पर"मित्यादिवचनात् । अथ प्राकृताप्राकृतोभयभिन्नाचेतनद्रव्यविशेषः कालो नित्यो विभुश्च "अथ नित्यानि ह वै पुरुषः प्रकृतिः काल" इत्यादिश्रुतेः । "सदेव सौम्येदमग्र आसादि"ति श्रुतौ सृष्टेः प्राक् अग्रशब्दवाच्यस्य कालस्य सत्यत्वश्रवणाच्च । "अनादिर्भगवान्कालो नान्तोऽस्य द्विज ! विद्यते । न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इत्यादिस्मरणाच्च । स च भूतभविष्यद्वर्त्तमानयुगपच्चिरक्षिप्रादिव्यवहारासाधारणहेतुः, सृष्ट्यादिसहकारी च, परमाण्वादिपरार्द्धावसानव्यवहारासाधारणकारणश्च । तस्य च पुराणेषु प्रसिद्धत्वान्नात्र विस्तरः । सर्वमपि प्राकृतं वस्तु कालतन्त्रम्, कालस्य सर्वनियामकत्वेऽपि परमेश्वरनियम्यत्वमेव, "ज्ञः कालकालो गुणी सर्वविद्यः" इतिश्रुतेः । ब्रह्मपदार्थस्तु पूर्वं

व्युत्पादितः, वक्ष्यमाणजगत्कर्तृत्वादिगुणगणनिलयः परब्रह्मनारायणवासुदेवादिशब्दाभिधेयः श्रीकृष्णः । यथाहुः "स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम् । व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥" इति । चिदचिद्ब्रह्मपदार्थानां तत्तत्प्रकरणपठितैस्तत्तद्गुणस्वरूपादिविशेषत्वबोधकैर्वाक्यैरितरेतरवैलक्षण्यमुपदिश्यते । "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् । आत्मा वा इदमेक एवाग्र आसीत् । तत्त्वमसि । अयमात्मा ब्रह्म । सर्वं खल्विदं ब्रह्म । त्वं वा अहमस्मि भगवो देवते । तदात्मानमेव वेदाहं ब्रह्मास्मि" इत्यादिवाक्यैश्च चिदचितोर्ब्रह्मतादात्म्यमुपदिश्यते । एवं चोभयविधवाक्यानां स्वार्थे प्रामाण्यात् चिदचितोर्भिन्नस्वरूपयोरपीन्द्रियाणां भिन्नस्वरूपाणामपि "न वै वाचो न चक्षूंषि न मन इत्याचक्षते प्राण इत्येवाचक्षते" इति छान्दोग्ये प्राणेन्द्रियसम्वादे प्रसिद्धानां प्राणायत्तत्वादेव प्राणाभिन्नत्ववद्ब्रह्मायत्तस्थितिप्रवृत्तिमत्त्वेन ब्रह्माभिन्नत्वाच्चिदचिद्भिन्नाभिन्नं जिज्ञास्यं ब्रह्म सूत्रकाराभिमतम् । अत एव तत्त्वद्वयजिज्ञासाकाङ्क्षा नास्ति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च सूपपन्ना । यथाहुः "सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः । ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपताऽपि श्रुतिसूत्रसाधिता ॥" इति । "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके । उभयव्यपदेशात्त्वहिकुण्डलवत् । प्रकाशाश्रयवद्वा तेजस्त्वादि"त्यादीनि सूत्राण्यनुसन्धेयानि । विशेषविस्तरस्त्वग्रे द्रष्टव्यः । श्रुत्यर्थनिर्णायकस्यास्य सूत्रस्योपोद्घातरूपत्वात् शास्त्रे प्रेक्षावत्प्रवृत्तयेऽनुबन्धा अप्यनेनार्थादुक्ताः । ते चाधिकारिविषयसम्बन्धप्रयोजनाख्याः । तत्रोक्तलक्षणो मुमुक्षुरिहाधिकारी । विषयश्चास्य ब्रह्मादिशब्दा-

भिधेयः सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिगुणशक्त्याद्याश्रयो ब्रह्मरुद्रेन्द्रप्रकृतिपरमाणुकालकर्मस्वभावादिनियन्ता दोषास्पृष्टसीमा चिदचित्स्वाभाविकभेदाभेदाश्रयो भगवान्वासुदेवः श्रीपुरुषोत्तमः । विषयविषयिभावलक्षणः सम्बन्धः । श्रीभगवद्भावापत्तिलक्षणो मोक्षोऽत्र प्रयोजनम् ॥ १ ॥ ( इति जिज्ञासाधिकरणम् ) ॥ १ ॥

(वे०पा०सौ०) तल्लक्षणापेक्षायां सिद्धान्तमाह—

सू० जन्माद्यस्य यतः १ । १ । २ ॥

अस्याऽचिन्त्यविचित्रसंस्थानसम्पन्नस्यासंख्येयनामरूपादिविशेषाश्रयस्याचिन्त्यरूपस्य विश्वस्य सृष्टिस्थितिलया यस्मात्सर्वज्ञाद्यनन्तगुणाश्रयाद्ब्रह्मेशकालादिनियन्तुर्भगवतो भवन्ति, तदेव पूर्वोक्तनिर्वचनविषयं ब्रह्मेति लक्षणवाक्यार्थः ॥ २ ॥

( वे० कौ० ) एवं निरुक्त्या बृहद्गुणशक्तिस्वरूपं श्रीकृष्णाख्यं ब्रह्म पूर्वाधिकरणे निर्णीतम्, इदानीं किं तल्लक्षणमित्याकाङ्क्षायां तदेव जगज्जन्मादिकर्तृत्वसार्वज्ञ्यसत्यत्वादिमत्त्वेन प्रतिपाद्यते ।

अत्रास्येतिशब्दो जगदाख्यकार्यपरः । यत इति च कारणवाचकः । पूर्वसूत्राद्ब्रह्मेति पदमनुवर्त्तते । यत्तदोर्नित्यसम्बन्धात्तच्छब्दाऽध्याहारः । जन्म आदिर्यस्य तदिदं जन्मादि सृष्टिस्थितिलयमोक्षम् । अत्र तद्गुणसंज्ञानो बहुव्रीहिः । यतो यस्मात्सर्वेश्वरात्सर्वज्ञात्सर्वशक्तेः परमकारणात्सर्वनियन्तुर्भगवतः श्रीपुरुषोत्तमात् अस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयस्य तर्कागोचररचनस्य सृष्टिस्थितिलयमोक्षाः प्रवर्त्तन्ते, तद्ब्रह्म त-

देव मुमुक्षुभिर्जिज्ञास्यमिति सूत्राक्षरयोजना । तथा च श्रुतयः "भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्मे"त्युपक्रम्य, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म। सत्यं ज्ञानमनन्तं ब्रह्मे"त्याद्याः। यतो यस्माच्छ्रीपुरुषोत्तमादिमानि महदादितृणान्तानि भूतानि जायन्ते इति सृष्टिरुक्ता, येन जातानि जीवन्तीति स्थितिरुक्ता, अभिसम्विशन्तीति लयो दर्शितः, यत्प्रयन्ति यं सर्वकर्मध्वंसानन्तरं प्राप्नुवन्तीति मोक्ष उक्तः । अत्र चेतनस्यानादिनिधनस्य देहादिसंयोगहेतुकविचित्रविज्ञानविकाशो जन्म, तत्संकोचपूर्वकः कारणप्रवेशः प्रलयः। एतच्च "चराचरव्यपाश्रय" इत्यादिसूत्रद्वयव्याख्याने स्फुटीभविष्यति । अचेतनांशस्य सृष्ट्यादौ रूपान्तरभावे मुख्यतेति विवेकः। द्वितीयवाक्यार्थस्तु सत्यत्वज्ञानत्वानन्तत्वधर्मवद्ब्रह्मेति । अत्र सत्यपदमसत्यस्य ज्ञानपदमचिद्वर्गस्यानन्तपदं जीववर्गस्य च व्यावर्त्तकम्। तथाच जगदभिन्ननिमित्तोपादानत्वे सति सत्यत्वादिमत्त्वं ब्रह्मलक्षणं सिद्धम्। परापरादिशब्दाभिधेयानां स्वस्वाभाविकीनां सूक्ष्मावस्थापन्नानां शक्तीनां तत्तद्गतसद्रूपकार्याणाञ्च स्थूलतया प्रकाशकत्वमुपादानत्वम्। स्वस्वानादिकर्मसंस्कारवशीभूतात्यन्तसङ्कुचितभोगस्मरणानर्हज्ञानधर्माणां चेतनानां कर्मफलभोगार्हज्ञानप्रकाशनेन तत्तत्कर्मफलतत्तद्भोगसाधनैः सह योजयितृत्वं निमित्तत्वम्। विषयवाक्यानुरूपा स्मृतिश्च "भृगुणाऽभिहितं शास्त्रं भारद्वाजाय पृच्छते" इत्युपक्रम्य, "स एष भगवान्विष्णुरनन्त इति विश्रुतः। सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्मभिः। अहङ्कारस्य यः स्रष्टा सर्वभूतभवाय वै। यतः समभवद्विश्वं पृष्टोऽहं यदिहत्वये"ति मोक्षधर्मे। ननु श्वे-

ताश्वतरोपनिषदि "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्य"मिति बहूनि कारणान्युक्तानि, पुरुषोत्तमो वासुदेव एव जगतां कर्त्तेति निर्धारणे किं प्रमाणमिति चेच्छृणु "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः । ज्ञः कालकालो गुणी सर्वविद्यः । न यस्य कश्चिज्जनिता नं चाधिपः । एको ह वै नारायण आसीत् । विष्णुस्तदासीद्धरिरेव निष्कलः । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते। एतस्य ध्यानान्तःस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत । एको वशी सर्वगः कृष्ण ईड्यः । एकोऽपि सन्बहुधा यो विभाति । क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवान् । अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः । कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः । कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् । वेदे रामायणे चैव भारते पञ्चरात्रके । आदावन्ते च मध्ये च हरिः सर्वत्र गीयते । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तत" इत्यादिश्रुतिस्मृतिपूगो जगत्कारणनिर्धारणे मानम् । जगदुत्पत्त्यादिविषयेषु वाक्येषु क्वचिच्छ्रूयमाणाः हिरण्यगर्भादिशब्दा उक्तलक्षणब्रह्मपरा ज्ञेयाः । तस्मात्सर्वात्मा सर्वेश्वरः सर्ववेदैकवेद्यः श्रीकृष्णो जगतः कारणमिति सिद्धम् ॥ २ ॥ ( इति जन्माद्यधिकरणम् ॥ २ ॥ )

(वे०पा०सौ०) किंप्रमाणकमित्याकाङ्क्षायां सिद्धान्तमाह—

सू० शास्त्रयोनित्वात् । १ । १ । ३ ॥

शास्त्रमेव योनिस्तज्ज्ञप्तिकारणं यस्मिंस्तदेवोक्तलक्षणलक्षितं वस्तु

ब्रह्मशब्दाभिधेयमिति ॥ ३ ॥

(वे०कौ०) एवं जिज्ञासासूत्रेण ब्रह्म जिज्ञास्यमित्युक्तं, लक्षणसूत्रेण च जगज्जन्मादिकारणत्वं सत्यत्वादिमत्त्वं ब्रह्मलक्षणमुक्तम्, इदानीं तत्र किम्प्रमाणमित्याकाङ्क्षायां प्रमाणमुच्यते ।

उक्तलक्षणं ब्रह्मानुमानादिगम्यमुत वेदप्रमाणकमिति संशये, अनुमानादिगम्यं "यतो वाचो निवर्त्तन्त" इति ब्रह्मणो वागगोचरत्वश्रवणादिति पूर्वपक्षे, ब्रह्म नानुमानादिगम्यं किन्तु वेदप्रमाणकम् । कुतः ? शास्त्रयोनित्वात् । शास्त्रं वेदः योनिः कारणं ज्ञापकं प्रमाणं यस्मिंस्तच्छास्त्रयोनि तस्य भावस्तत्त्वं तस्माच्छास्त्रयोनित्वाच्छास्त्रप्रमाणकत्वात् । वेदैकप्रमाणकमेव ब्रह्मेति सिद्धान्तः। ननु लाघवाच्छास्त्रयोनीत्येव सुवचम्, तथाच शास्त्रयोनि वेदप्रमाणकम् ब्रह्मेतीष्टसिद्धिरिति चेन्न । नानुमानादिगम्यं ब्रह्म शास्त्रयोनित्वादितीतरप्रमाणविघातकहेतुनिर्देशात्। ननु नानुमानादिगम्यमिति कुतो लभ्यते इति चेत्, पूर्वोक्तकार्यत्वलिङ्गेन जगतः कर्तृजन्यत्वसाधकेनानुमानगम्यं ब्रह्मेति शङ्का जाता(१) तन्निवारणायार्थिकस्तत्पदलाभः "सर्वे वेदा यत्पदमामनन्ति सर्वे वेदा यत्रैकीभवन्ति तं त्वौपनिषदं पुरुषं पृच्छामः । नावेदविन्मनुते तं बृहन्त"मित्यादिश्रुतिभ्यः । "वेदैश्च सर्वैरहमेव वेद्यः । वेदे रामायणे चैव भारते पञ्चरात्रके । आदावन्ते च मध्ये च हरिः सर्वत्र गीयते । नमामि सर्ववचसां प्रतिष्ठा यत्र शाश्वती"त्यादिस्मृतिभ्यश्च। ननु पृथिव्यादीनि सावयवानि भूतानि सकर्तृकाणि कार्यत्वात् घटादिवदित्यनुमानेनेतरस्य कारणत्वासम्भवाज्जगत्कारणात्मकब्रह्मासिद्धौ किं वेदे-

(१) जगत्कर्तृजन्यं कार्यत्वात् घटवत् इत्यनुमानं पूर्वसूत्रेण सूचितम्, तेनानुमानगम्यं जगत्कारणं किञ्चिदस्तीति शङ्का जाता ॥

नेति चेन्न। आकाशादिभूतोत्पत्तेर्वेदमन्तरेण केनापि ज्ञातुमशक्यत्वात्तन्निष्ठकार्यत्वस्यासिद्धत्वेन हेतोः स्वरूपासिद्धत्वात्। न च वेदद्वारा भूतोत्पत्तिर्ज्ञातव्या तया च तन्निष्ठकार्यत्वसिद्ध्या न स्वरूपासिद्धो हेतुरिति वाच्यम्। तथैव वेदादेव जगत्कारणे ब्रह्मणि विज्ञाते सति अनुमानवैयर्थ्यापत्तेः, अस्मत्पक्षप्रवेशाच्च। एवं क्षित्यङ्कुरादीनां प्रसिद्धानां कार्याणामपि कार्यत्वेन लिङ्गेन न ब्रह्मानुमातुं शक्यम्, भूबीजजलजीवादीनां तत्कारणत्वकल्पनासम्भवाददृष्टकल्पनाया अन्याय्यत्वाच्च।

अत्रेदं बोध्यम्। यत्र यत्र कार्यत्वं दृश्यते तत्तदनुरूपः क्षेत्रज्ञः कर्त्ताऽप्यनुमानेन साधयितुं शक्यः। कृत्स्नस्य तु विश्वस्य वेदं विना कार्यत्वमप्रसिद्धमतो जगत्कर्त्ताऽपि वेदादेव ज्ञातुं शक्यो नत्वनुमानसहस्रेण। न च प्रत्यक्षप्रमाणगम्यं ब्रह्म, तद्ग्रहणे हि साधारणानामिन्द्रियाणामसामर्थ्यात्। नेन्द्रियाणि नानुमानं, "नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे"ति श्रुतेः। हे प्रेष्ठ! एषा ब्रह्मविषया मतिस्तर्केण न निरस्या। यद्वा न प्राप्तुं योग्या। अन्येन वेदविदा सर्वज्ञेनाचार्येण प्रोक्ता सुज्ञानाय भवतीत्यर्थः। "तर्काप्रतिष्ठाना"दित्यादिसूत्रात्। "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि"ति मनुस्मृतेः। "अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्। नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चय" इति महाभारताच्च। किञ्च सर्वज्ञैर्मन्त्रैः ऋषिभिश्च साकल्येन सर्वथाऽगम्यं दुर्बोधमचिन्त्यानन्तगुणशक्त्यादिमज्जगत्कारणं ब्रह्मानुमानादिवेद्यमिति कोऽनुन्मत्तो ब्रूयात्। न च "यतो वाचो निवर्त्तन्त" इत्यादिश्रुतीनां का गतिरिति शङ्क्यम्। तासामियत्तानवच्छिन्नं ब्रह्मेत्यर्थपरत्वात्। वक्ष्यति च "प्रकृतैतावत्त्वं ही"ति सूत्रे। शास्त्रस्य योनिः शास्त्रयोनीति विग्रहे-

ऽप्ययमेवार्थः, सर्वज्ञब्रह्मनिःश्वसितैरन्तरङ्गैर्वेदैरेव ब्रह्म वेद्यं, न बहिर्भूतैरन्यकल्पितानुमानादिभिरिति फलितोऽर्थः । अत्रास्य सूत्रस्य "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद" इतिवाक्यं विषयः । न चास्मिन्नर्थे वेदानां नित्यत्वहानिः, नित्यसिद्धानां निर्गमनमात्रस्वीकारात् , "वाचा विरूपनित्यया । अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" इति श्रुतिस्मृतिभ्याञ्च ! अनेन ब्रह्मणोऽप्राकृतो नित्यो विग्रहः सूचितः । प्राकृतसृष्टेः पूर्ववर्त्तिनो वेदस्य तन्निःश्वसितत्वात् । एतदुपरिष्टाद्वक्ष्यामः । तत्सिद्धं वेदैकप्रमाणकं ब्रह्मेति ॥३॥ इति शास्त्रयोन्यधिकरणम् ॥३॥

(वे०पा०सौ०) ननु समस्तस्यापि वेदस्य क्रियापरत्वेन तद्भिन्नविषयकाणां वेदान्तवाक्यानामप्यर्थवादवाक्यानां तत्प्राशस्त्यप्रतिपादनद्वारा परम्परया विधिवाक्यैकवाक्यतावत् क्रत्वङ्गकर्तृप्राशस्त्यप्रतिपादनेन विध्येकपरत्वात् कथमिव शास्त्रैकप्रमाणकं ब्रह्मेति प्राप्ते राद्धान्तः—

## सू० तत्तु समन्वयात् । १ । १ । ४ ॥

तज्जिज्ञास्यं विश्वकारणं शास्त्रप्रमाणकं ब्रह्मैव न कर्मादि, तत्रैव प्रतिपादकतया कृत्स्नस्यापि वेदस्य समन्वयात् । मुख्यवृत्त्याऽन्वयः समन्वयस्तस्मात् । यद्वा वेदेषु तस्यैव प्रतिपादकतया समन्वयादिति संक्षेपः । न च कर्मणि तत्समन्वयो वक्तुं शक्यः, तस्य तु विविदिषोत्पादनेनैव नैराकाङ्क्ष्यात् । क्रत्वङ्गं ब्रह्मेति तु बालभाषितम् । तस्य सर्वकर्मकर्त्रादिकारकनियन्तृत्वेन स्वातन्त्र्यात्तत्फलदातृत्वाच्च, प्रत्युत कर्मण एव विविदिषोत्पादनेन परम्परया तत्प्राप्तिसाधनीभूतज्ञानोत्पत्त्युपकारकत्वेन समन्वय इति निश्चीयते, विविदिषाश्रुतेः । ननु प्रत्यक्षादिप्रमाणाविषयकत्ववच्छब्दप्रमाणाविषयत्वस्यापि श्रुतिसिद्धत्वान्न शास्त्रैकप्रमेयं ब्रह्मेति प्राप्ते ब्रूमः । जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव नान्यप्रमाणकम् ,

समस्तश्रुतीनां साक्षात्परम्परया वा तत्रैव समन्वयात् । तत्र लक्षणप्रमाणादिवाक्यानां स्वत एव तद्विषयकत्वेन शाण्डिल्यपञ्चाग्निमधुविद्यादिवाक्यानां प्रतीकादिप्रकारकाणाञ्च परम्परया समन्वयः । यद्वा सर्वेषामपि वाक्यानां भिन्नप्रवृत्तिनिमित्तकत्वेऽपि साक्षादेव ब्रह्मणि समन्वयः । तत्तद्वाक्यविषयाणां सर्वेषामपि ब्रह्मात्मकत्वाविशेषेण मुख्यवाच्यत्वात् । न चैवं विषयनिषेधपराणां बाधः शङ्कनीयस्तेषां ब्रह्मस्वरूपगुणादिविषयकेयत्तानिषेधपरत्वेन समविषयत्वात् । किञ्चात्र प्रष्टव्यो भवान्—शब्दाऽविषयं ब्रह्मेति वाक्यस्य वाच्यं ब्रह्माभिप्रेतं नवेति ! आद्ये वाच्यत्वसिद्धेरवाच्यत्वप्रतिज्ञाभङ्गः । द्वितीये सुतरां वाच्यतेति । तस्मात्सर्वज्ञः सर्वाचिन्त्यशक्तिविश्वजन्मादिहेतुर्वेदैकप्रमाणगम्यः सर्वभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासाविषयस्तत्रैव सर्वं शास्त्रं समन्वेतीत्यौपनिषदानां सिद्धान्तः ॥ ४ ॥

(वे०कौ०) एवं श्रीकृष्णस्य बृहद्गुणशक्त्याश्रयस्य जगदभिन्नानिमित्तकारणस्य वेदैकप्रमाणकत्वमुक्तम् । इदानीं तदेव द्रढयितुं सर्ववेदसमन्वयं तस्मिन्ब्रह्मणि सर्वेश्वरे दर्शयन् "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना"मिति वदता जैमिनिना सर्वोपि वेदः क्रियायां योजितोऽक्रियार्थानामानर्थक्यविधानाद्वेदान्तानामपि क्रत्वङ्गकर्तृप्राशस्त्यप्रकाशनद्वारा क्रियायां समन्वयात्कथं वेदैकप्रमाणकं ब्रह्मेत्याक्षेपं निराकरोति ।

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तत् जिज्ञास्यं जगत्कारणं ब्रह्मैव वेदैकप्रमाणकम्, कुतः? समन्वयात् । वेदेषु तस्यैव समन्वयात् । सम्यग्वाच्यतयाऽन्वयः समन्वयस्तस्मात् । सर्वस्य वेदस्य वा तस्मिन्मुमुक्षुजिज्ञास्ये जगदभिन्ननिमित्तोपादानकारणे शास्त्रयोनौ प्रधानक्षेत्रज्ञकालकर्मादिनियन्तरि ब्रह्मरुद्रेन्द्रादिकिरीटेडितपादपीठे निखिलदोषगन्धाऽघ्रातमाहात्म्ये सार्वज्ञ्याद्यनन्तगुणनिलये

मुक्तोपसृप्ये ब्रह्मणि श्रीकृष्णे सम्यग्वाचकतयाऽन्वयस्तस्मात् । समन्वितश्च "यतो वा इमानि भूतानि जायन्ते । आनन्दादेव खल्विमानि भूतानि जायन्ते । एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेय । नारायणाज्जायते प्राणः नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते । एको ह वै नारायण आसीत् न ब्रह्मा नेशानः । ब्रह्म वा इदमेकमेवाग्र आसीत् । ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदाहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत् । आत्मा वा इदमेकमेवाग्र आसीत् । तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । सर्वे वेदा यत्पदमामनन्ति । सर्वे वेदा यत्रैकीभवन्ति । अन्तःप्रविष्टः शास्ता जनानाम् । यं सर्वे देवा नमन्ति । सत्यं ज्ञानमनन्तं ब्रह्म । आनन्दं ब्रह्मणो विद्वान् । विज्ञानमानन्दं ब्रह्म । सर्वं खल्विदं ब्रह्म । य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः । यः सर्वज्ञः सर्ववित् । ब्रह्मविदाप्नोति परम् । ब्रह्मैवेदं सर्व"मित्यादिवाक्यकदम्बस्तत्रैव । ननु पञ्चप्रकारवाक्यसमुदायस्तावत्समस्तो वेदः, वाक्यानि च विधिनिषेधार्थवादमन्त्रनामधेयाख्यानि । तत्र "ज्योतिष्टोमेन यजेत स्वर्गकाम" इत्यादि विधिवाक्यम् । "ब्राह्मणो न हन्तव्य"इत्यादि निषेधवाक्यम् । "वायुर्वै क्षेपिष्ठा देवते"त्यादयोऽर्थवादाः । "इषे त्वा, अग्निर्मूर्द्धा दिव" इत्यादयो मन्त्राः । ज्योतिष्टोमाऽश्वमेधादीनि नामधेयानीति तेषां विवेकः । तथा चोपक्रमे "अथातो धर्मजिज्ञासे"ति सूत्रे वेदस्याध्ययनविधिकरणकभावनाविधिभाव्यफलवदर्थपरत्वमुक्तम् । "चोदना लक्षणोऽर्थो धर्म" इति द्वितीये लक्षणसूत्रे धर्मे चोदना प्रमाणमिति (यत्र) कार्यपरत्वव्याप्यं वेदप्रामाण्यं तत्र कार्यपरत्वमिति व्याप्त्या निर्णीतम् । तत्र "वायुर्वै क्षेपि-

ष्ठा देवते"त्यर्थवादानां धर्मे प्रामाण्यमस्ति नवेति संशये, पूर्वपक्षमाह—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना"मिति । वेदस्य क्रिया एवार्थो विषयः प्रतिपाद्यो यस्य स क्रियार्थस्तस्य भावस्तत्त्वं तस्माद्धेतोरर्थवादानां प्रामाण्यं नास्ति । किं तर्हीत्याशङ्क्याह अतदर्थानामानर्थक्यमिति, न सा क्रिया अर्थो येषां ते अतदर्था अर्थवादादयस्तेषामानर्थक्यमर्थशून्यत्वमेवास्तु, तथैव वेदान्तानामपि, नहि "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविध्युपात्तानां निष्फलब्रह्मपरत्वे प्रामाण्यं युक्तमिति प्राप्ते, सिद्धान्तमाह—"विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु"रिति। अर्थवादानां विधिवाक्यैरेकवाक्यत्वात्तद्विधेयार्थानां स्तुत्यर्थेन स्तुत्यर्थरूपेण द्वारेणार्थवादाः प्रमाणं स्युरिति । एवञ्च विधिनिषेधविधुराणां वेदान्तानां सिद्धार्थवस्तुबोधकानामपि मन्त्रार्थवादादिष्वेवान्तर्भावेणाध्ययनविध्युपात्तत्वात्सर्वथाऽऽनर्थक्यनिरासाय परम्परया साध्ये कर्मण्येवान्वयो युक्तः। स्वातन्त्र्याभ्युपगमे निष्फलत्वापत्तेस्तेषां क्रत्वङ्गकर्तृत्वप्रतिपादनेन नैराकाङ्क्ष्यम्बोध्यम्। तत्र तत्त्वंपदार्थपराणां वाक्यानां कर्मकर्तृदेवतास्तावकत्वं, तज्ज्ञानस्य च परविद्याख्यस्य फलस्तावकत्वं, वेदान्तवाक्यानि न ब्रह्मपराणि क्रत्वङ्गकर्तृप्राशस्त्यप्रकाशनपरत्वादर्थवादवाक्यवदिति चेन्न । स्वोत्प्रेक्षितकल्पनामात्रत्वात्, कर्मणो मोक्षोपायभूतविद्योत्पादकत्वेन परम्परया ब्रह्मण्येव समन्वयाच्च । "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने" त्यादिश्रुतेः। अत्र यज्ञेन विविदिषन्तीति अश्वेन जिगमिषतीतिवत् यदि यज्ञाख्यस्य करणस्य धात्वर्थेनान्वयस्तदा कर्मणो विद्यार्थत्वं तद्द्वारा ब्रह्मपरत्वञ्च ज्ञेयम्। यदि तु सन्प्रत्ययस्य प्राधान्यात्प्रत्ययार्थान्वयत्वादिच्छार्थत्वं तदेच्छाद्वारा विद्याङ्गत्वं तद्द्वारा ब्रह्मपरत्वम्बो-

ध्यम् । विद्याङ्गत्वं कर्मणो वक्ष्यति च "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववऽ"दिति । न च वेदान्तवेद्यं वस्तु क्रत्वङ्गमिति वक्तुं शक्यम् । तस्य सर्वकर्मकर्त्रादिकारकनियन्तृत्वेन स्वातन्त्र्यात् । न च वेदान्तानां विध्यङ्गत्वमर्थवादादिवद्वक्तुं शक्यम् । भिन्नप्रकरणपठितत्वाद्विधिसान्निध्याभावाच्च । नापि प्रवृत्तिनिवृत्त्यभावरूपभूतार्थबोधकतया वेदान्तानां निष्फलत्वं वक्तुं शक्यम् । वेदान्तवेद्यब्रह्मज्ञानस्य मोक्षरूपपरमश्रेयःफलवत्त्वात् । नन्व "क्षय्यं ह वै चातुर्मास्ययाजिन" इत्यादिना कर्मणोऽपि तद्वत् फलश्रवणात्तत्र समन्वयो न दोषावह इति चेन्न । "यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोक" इत्यस्याः केवलकर्मजितो लोकोऽनित्यः कर्मैकप्राप्यत्वात्कृष्यादिवदित्यनुमानानुगृहीतायाः "प्लवा ह्येतेऽदृढा यज्ञरूपा" इति श्रुत्यन्तरदृढीकृतार्थायाः श्रुतेः प्राबल्यात्, "अक्षय्यं ह वै चे"त्यादिश्रुतेर्दौर्बल्याद्दुर्बलवाक्यार्थे कर्मणि तत्समन्वयस्यानौचित्याच्च । "एतद्विदुरमृतास्ते भवन्ति ब्रह्मविदाप्नोति पर"मित्यादिश्रुत्युक्तोऽर्थस्तु न केनापि वेदवचनेन विरुद्ध्यते । नच शक्यश्चालयितुमनुमानशतैः । न च अक्षय्यमिति श्रुत्यर्थबाधः, तस्या आपेक्षिकार्थपरत्वात्, "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन! । मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते" इति वेदपर्य्यायभूतायाः श्रीभगवत्स्मृतेरुभयत्र प्रामाण्याच्च । ननु स्यादेतदुपनिषद्भागस्य कथञ्चिद्ब्रह्मपरत्वं तत्र तथात्वदर्शनात्पूर्वभागस्य तु "यावज्जीवमग्निहोत्रं जुहोति । ज्योतिष्टोमेन यजेत स्वर्गकाम"इत्यादिना नित्यकाम्यादिकर्मविधायकत्वेन निराकाङ्क्षत्वश्रवणात्कथं ब्रह्मपरत्वमिति चेन्न । कृत्स्नस्यापि वेदस्य ब्रह्मपरत्वमेव, कर्मादौ तस्य केनाचिदंशेन कथञ्चिदन्वयदर्शनेऽपि समन्वयस्तु ब्रह्मण्येव । तत्रोपनिषद्भागस्य हि

साक्षात्स्वरूपगुणादिप्रतिपादनपरत्वात्साक्षादन्वयः। तत्रापि चिदचिद्ब्रह्मस्वरूपपरत्वेन भेदवाक्यानां सर्वस्य ब्रह्मात्मकत्वप्रतिपादनपरत्वेनाभेदवाक्यानां सृष्ट्यादिपराणां वाक्यानां जगत्कर्त्तृत्वादिगुणप्रतिपादनपरत्वेन निर्गुणवाक्यानां मायिकगुणनिषेधपरत्वेन सगुणवचनानां स्वाभाविकगुणप्रतिपादनपरत्वेन "यद्वाचाऽनभ्युदित"मित्यादीनामियत्तानवच्छिन्नत्वप्रतिपादनपरत्वेन चान्वयः। नित्यनैमित्तिककर्मपराणां चाधिकारिसत्त्वशुद्धिसम्पादनद्वारा ब्रह्मविषयकज्ञानादिसहकारित्वेन काम्यपराणां चै"तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति विषयानन्दस्यापि ब्रह्मानन्दलेशत्वात्तद्वारा ब्रह्मण्येवान्वयः। किञ्च काम्यानां मोक्षाधिकारिशुद्धदेवादिदेहोत्पादनद्वारा ब्रह्मविद्यापरत्वेन समन्वयः। किञ्च संयोगपृथक्त्वन्यायेन "दध्नेन्द्रियकामस्य जुहुया"दिति वाक्यान्तरेण "दध्ना जुहोती"त्यनेन नित्यस्यापि दध्न इन्द्रियार्थत्वमिव स्वर्गाद्यर्थस्यापि कर्मणो विद्यार्थत्वं बोध्यम्। "आप्रणखात्सुवर्णा"दिवाक्यानां च श्रीविग्रहपरत्वेन समन्वयः। यद्वा सर्वस्य वस्तुजातस्य ब्रह्मात्मकत्वात्तद्वाचकशब्दजातस्य साक्षात्तत्रान्वयः। तस्मात्कृत्स्नस्य वेदस्य सर्वज्ञे स्वाभाविकानन्ताचिन्त्यशक्तौ जगत्कारणे ब्रह्मणि पुरुषोत्तमे चिदचिद्भिन्नाभिन्ने श्रीकृष्णे समन्वय इति सिद्धम् "वेदैश्च सर्वैरहमेव वेद्य" इति श्रीमुखवचनात्। शास्त्रमूलभूता चतुःसूत्री व्याख्याताऽस्या व्याख्यानभूतं शास्त्रमिदम् ॥४॥ इति समन्वयाधिकरणम् ॥४॥

इति श्रीसनत्कुमारसन्ततिप्रवर्त्तकश्रीभगवन्निम्बादित्यपादपङ्कजान्तेवासिपाञ्चजन्यावतारश्रीश्रीनिवासाचार्यविरचिते वेदान्तकौस्तुभभाष्ये प्रथमाध्यायस्य प्रथमपादे चतुःसूत्रीव्याख्या ॥

